**हड़िः**, पुं, काष्ठबन्धविशेषः। हाड़ इति भाषा। यथा,—
"निगड़ो लोहबन्धेऽस्त्री हडिः काष्ठस्य यन्त्रणे॥"
इति क्षत्रियवर्गे शब्दमाला॥

**हड़िक**, पुं, नीचजातिविशेषः। हाड़ि इति भाषा। तत्पर्य्यायः।
"हड़िकस्तु मलाकर्षी हड्डकश्चावपञ्चिका॥"
इति शब्दमाला॥

**हड्डं**, क्लो, अस्थि। हाड़ इति भाषा। इति शब्दचन्द्रिका॥

**हड्डकः**, पुं, नीचजातिविशेषः। इति शब्दमाला॥ हाड़ि इति भाषा॥

**हड्डजं**, क्लो, मज्जा। इति शब्दचन्द्रिका॥

**हड्डिः**, **हड्डिकः** पुं, हड्डिपजातिः। हाड़ि इति भाषा। स तु चाण्डालीगर्भे लेटस्य चौरसेन जातः। यथा,—
"मद्यचाण्डालकन्यायां लेटवीर्य्येण शौनक।
बभूवतुस्तौ द्वौ पुत्रौ हड्डिकश्चौण्डिकौ ...॥"
हड्डिकश्चौण्डिकाविल्यत्र दृष्टौ हड्डिका...
...पि।
पाठः। इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे१०अध्याय॥

**हड्डिपः**, पुं, मलेग्रहिः। इति मुग्धबोधव्याकरणम्॥ हाड़ि इति भाषा॥

**हण्डा**, व्य, नाय्योक्तौ नीचसम्बोधनम्। इत्यमरटीकायां भरतः॥ स्त्री, मृत्पात्रभेदः। हाँड़ा इति भाषा। इति वक्ष्यमाणशब्ददर्शनात्॥

**हण्डिका**, स्त्री, (हण्डा + स्वार्थे कन्। टापि अत इत्वम्।) मृत्पात्रविशेषः। हाँड़ी इति भाषा। इति वक्ष्यमाणशब्ददर्शनात्॥

**हण्डिकासुतः**, पुं, (हण्डिकायाः सुत इव। ...) हण्डिका। तत्पर्य्यायः। ...। इति त्रिकाण्डशेषः॥ क्वचित्।

**हण्डी**, स्त्री, हण्डिका। हाँड़ी इति भाषा। इति

**हण्डे**, व्य, नाय्योक्तौ नीचसम्बोधनम्। इत्यमरः। १। ७। १५॥

**हतः**, त्रि, (हन + क्तः।) आशारहितः। तत्पर्य्यायः। मनोहतः २ प्रतिहतः ३ प्रतिबद्धः ४ इत्यमरः। ३। १। ४१॥ नष्टः। तत्पर्य्यायः। प्रमापितः २ निवर्हितः ३ निकारितः ४ निगारितः ५ प्रवासितः ६ परासितः ७ निषूदितः ८ निहिंसितः ९ निर्व्वासितः १० सज्ञपितः ११ निर्ग्रन्थितः १२ अपासितः १३ निस्तर्हितः १४ मिहतः १५ क्षणितः १६ परिवर्ज्जितः १७ निर्व्वापितः १८ विशसितः १९ मारितः २० प्रतिघातितः २१ उद्वासितः २२ प्रमथितः २३ क्रथितः २४ उज्जासितः २५ आलम्भितः २६ पिञ्जितः २७ विशरितः २८ घातितः २९ उन्मथितः ३० वधितः ३१। इत्यमरदर्शनात्॥ पूरितार्थे तत्पर्य्यायः। पिण्डितम् २ गुणितम्। ... क्लो॥*॥ ...
"... हतं अज्ञानभूसुरम्।
अव्रत्यञ्चं हतं चैवमनाचारं हतं कुलम्॥
सदम्भश्च हतो धर्म्मः क्रोधेनैव हतं तपः।
अदृढञ्च हतं ज्ञानं प्रमादेन हतं श्रुतम्॥
गुर्व्वभक्त्या हता नारी ब्रह्मचारी तथा हतः।
अदीप्तेऽग्नौ हतो होमो हता त्वजिरमर्तिका॥
उपजीव्या हता कन्या स्वार्थे पाकक्रिया हता।
शूद्रभिक्षोर्हतो यागः कृपणस्य हतं धनम्॥
अनभ्यासहता विद्या हतो राजा विरोधकृत्।
जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम्॥
असत्या च हता वाणी तथा पैशुन्यवादिनो।
सन्दिग्धोपहतो मन्त्रो व्यग्रचित्तो हतो जपः॥
अनश्रोत्रिये दानं हतो लोकश्च नास्तिकः।
अश्रद्धया हतं सर्व्वं यत् कृतं पारलौकिकम्॥
इह लोका हतो नूनं दरिद्राणां परन्तप।
मनुष्याणां तथा जन्म मातृस्नानं विना हतम्॥"
इति पाद्मोत्तरखण्डे ४ अध्यायः॥

**हतकः**, पुं, (हत इव। कन्।) नीचलोकः। इति केचित्॥ (यथा, साहित्यदर्पणे। ६। ३८५।
"देव अजातशत्रौ अद्यापि दुर्य्योधनहतकः॥")

**हतमूर्खः**, पुं, (मूर्खे हत इव।) अतिमूर्खः। यथा,—
"क्रूरः खलो हतमूर्खः पापशीलो भवेन्नरः।
बुधस्यागमने नित्यं जायते स नराधमः॥"
इति जातकरत्नकोष्ठीप्रदीपी॥

**हताशः**, त्रि, (हता आशा यस्य।) निर्दयः। आशारहितः। विमनः। इति मेदिनी॥ वन्ध्यः। इति शब्दरत्नावली॥

**हतिः**, स्त्री, (हन + क्तिन्।) अपकर्षः। यथा। मुख्यार्थहतिर्दोषः। हतिरपकर्षः। इति काव्यप्रकाशे ७ उल्लासः॥ हत्या च॥ (यथा, महाभारते। १२। ३६०। ९।
"आगया ह्यभिपन्नानामकृत्वाप्रमार्ज्जनम्।
राजा वा राजपुत्रो वा भ्रूणहत्येव युज्यते॥"
ताडनम्। यथा, गीतगोविन्दे। १। १२।
"वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम्॥"
विनाशः। यथा, भागवते। ११। ३। १८।
"कर्म्माण्यारभमाणानां दुःखहत्यै सुखाय च।
पश्येत् पाकविपर्य्यासं मिथुनीचारिणां नृणाम्॥"

**हत्नुः**, पुं, (हन्ति शरीरमिति। हन + "कृहनिभ्यां क्त्नुः।" उणा० ३। ३८। इति क्त्नुः। "अनुदात्तोपदेशेति।" ६। ४। ३७। इति अनुनासिकलोपः।) व्याधिः। शस्त्रम्। इति उणादिकोषः॥ (हननशीले, त्रि। यथा, ऋग्वेदे। १। २५। २।
"मा नो वधाय हत्नवे जिहीड़ानस्य रीरधः॥")

**हत्या**, स्त्री, (हन + भावे क्यप्।) हननम्। वधः। यथा,—
"ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥"
इति प्रायश्चित्तविवेकादिः॥

**हथः**, पुं, (हन्ति सुखमिति। हन + "हनिकुषीति।" उणा० २। २। इति क्थन्।) विषादः। इति संक्षिप्तसारोणादिवृत्तिः। उणादिकोषश्च॥

**हद, ङ श्री त्यागे**। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-अक०-अनिट्।) त्यागः विष्ठोत्सर्गः। ङ, हदते जनः। श्री, हत्ता। इति दुर्गादासः॥

**हदनं**, क्ली, (हद + ल्युट्।) विष्ठात्यागः। हागा इति भाषा। यथा। विट्सृजिर्हदनम्। इति गुधातुटीकायां दुर्गादासः॥ हदधात्वर्थोऽप्यत्र॥

**हद्दा**, स्त्री, मेषादिलग्नानां त्रिंशदंशः। तेरशैह्रादिशलग्नेषु पञ्चानां पञ्चानां ग्रहाणां सङ्क्राविशेषेण भागविशेषा भवति। नराणां वर्षप्रवेशादौ शुभाशुभगणनायामस्य प्रयोजनम्। तद्भागविशेषो यथा।
मेषलग्ने प्रथमं बृहस्पतेः ६ भागाः। ततः शुक्रस्य ६ अंशाः। ततो बुधस्य ८ भागाः ततो मङ्गलस्य ५ भागाः। ततः शनेरपि ५ अंशाः। समुदायेन त्रिंशदंशाः भवन्ति॥
वृषलग्ने प्रथमं शुक्रस्य ८ भागाः। ततो बुधस्य ६ अंशाः। गुरोः ८ भागाः। शनेः ५ अंशाः। मङ्गलस्य ३ अंशाः॥
मिथुनलग्ने प्रथमं ६ भागाः बुधस्य। ततः शुक्रस्य ६ भागाः। बृहस्पतेः ५ अंशाः। मङ्गलस्य ७ अंशाः। शनेः ६ अंशाः॥
कर्कटलग्ने प्रथमं मङ्गलस्य ७ अंशाः। ततः शुक्रस्य ६ भागाः। बुधस्यापि ६ भागाः। बृहस्पतेः ७ अंशाः। शनेः ४ अंशाः॥
सिंहलग्ने प्रथमं ६ भागाः बृहस्पतेः शुक्रस्य ५ अंशाः। शनेः ७ भागाः। बुधस्य भागाः। मङ्गलस्यापि ६ भागाः॥
कन्यालग्ने प्रथमं बुधस्य ७ अंशाः। शुक्रस्य १० अंशाः। गुरोः ४ अंशाः। मङ्गलस्य भागाः। २ भागौ शनैश्चरस्य॥
तुलालग्ने आदौ ६ अंशाः शनेः। ८ भागा बुधस्य। गुरोः ७ भागाः। शुक्रस्यापि अंशाः। २ भागौ मङ्गलस्य॥
वृश्चिकलग्ने आदौ मङ्गलस्य ७ भागाः शुक्रस्य ४ अंशाः। ८ भागाः बुधस्य। बृहस्पतेः ५ अंशाः। ६ भागाः शनेः॥
धनुर्लग्ने प्रथमं बृहस्पतेः १२ अंशाः। ततः शुक्रस्य ५ अंशाः। बुधस्य ४ अंशाः। मङ्गलस्य ५ भागाः। शनेः ४ अंशाः॥
मकरलग्ने आदौ बुधस्य ७ अंशाः। गुरोरपि ७ भागाः। ८ अंशाः शुक्रस्य। शनेः अंशाः। मङ्गलस्यापि ४ अंशाः॥
कुम्भलग्ने प्रथमं बुधस्य ७ भागाः। शुक्रस्य भागाः। बृहस्पतेः ७ अंशाः। मङ्गलस्य भागाः। शनेरपि ५ भागाः॥
मीनलग्ने आदौ १२ अंशाः शुक्रस्य ४ भागाः बृहस्पतेः। बुधस्य ३ अंशाः। मङ्गलस्य ८ भागाः। ततः शनेः २ भागौ॥

एषां प्रमाणानि यथा, —
"मेषेऽङ्कतर्काष्टशरेषुभागा
जीवास्फुजिज्ज्ञारशनैश्चराणाम् ॥ १ ॥
वृषेऽष्टतर्काष्टशरानलांशाः
शुक्रज्ञजीवार्किकुजेशहद्दाः ॥ २ ॥
युग्मे षडङ्गेषुनगाङ्कभागाः
सौम्यास्फुजिज्जीवकुजार्किहद्दाः ॥ ३ ॥
कर्केऽद्रितर्काङ्गनगाक्षिभागाः
कुजास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ४ ॥
सिंहेऽङ्गभूताद्रिरसाङ्गभागा
देवेज्यशुक्रार्किबुधारहद्दाः ॥ ५ ॥
स्त्रियां नगाग्न्यक्षिनगाक्षिभागाः
सौम्योशनोजीवकुजार्किहद्दाः ॥ ६ ॥
तुले रसाष्टाद्रिनगाक्षिभागाः
कालज्ञजीवास्फुजिदारनाथाः ॥ ७ ॥
कीटे नगाब्ध्यष्टशराङ्गभागा
भौमास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ८ ॥
चापे रवाब्धेषुविषक्षवेदा
जीवास्फुजिज्ज्ञारशनैश्चराणाम् ॥ ९ ॥
मृगे नगाद्र्यष्टयुगश्रुतीनां
सौम्येज्यशुक्रार्किकुजेशहद्दाः ॥ १० ॥
कुम्भे नगाङ्गाद्रिशरेषुभागा
ज्ञशुक्रजीवारशनैश्चराणाम् ॥ ११ ॥
मीनेऽर्कवेदाग्निनवानलपक्षाः
सितेज्यसौम्यारशनैश्चराणाम् ॥" १२ ॥
इति नीलकण्ठीयताजकम् ॥

**हन, ल श्री गतौ ।** वधे । इति कविकल्पद्रुमः । (अदा०-पर०-सक०-अनिट् ।) ल, हन्ति । श्री, हन्ता । गणकृतमनित्यमिति न्यायात् शप् श्यनौ हननमपि वररुचिः । तेन सर्व्वो एवाहनत् पृथक् इत्यादि साधुः । इति दुर्गादासः ॥

**हन्, व्य,** रुषोक्ति । अनुनयः । इति मेदिनी ॥

**हनः, पुं,** हननकर्त्ता । यथा । हन्त्यस्य । घच-मभ्यासस्य हन्तस्य लभ्यामासीत कुण्पम् । घनाघन । पाटेर्णिलुक् च दीर्घश्चाभ्यासस्य पाटूपटः । पक्ष हनः पटः । इति सिद्धान्तकौमुदी । क्विप हन् । तस्य प्रथमैकवचनं हा ॥

**हननं, क्ली,** (हन + ल्युट् ।) मारणम् । यथा, —
"स्यात् प्राणवियोगफलकव्यापारो हननं स्मृतम् ॥"
इति प्रायश्चित्तविवेकः ॥
(यथा, भागवते । ९ । ११ । २० ।
"नेदं यशो रघुपतेः सुरयाच्ञयात्त-
लीलातनोरधिकसाम्यविमुक्तधाम्नः ।
रक्षोवधो जलधिबन्धनमस्त्रपूगैः
किं तस्य शत्रुहनने कपयः सहायाः ॥")
पूरणम् । इत्यङ्कशास्त्रम् ॥

**हनीलः, पुं,** कतकः । इति रत्नमाला ॥ हलीनोऽपि पाठः ॥

**हनुः, पुं,** (हन्ति कठिनद्रव्यादिकमिति । हन + [illegible] ।" उणा० १ । ११ । इति उः । स च नित् ।) कपोलद्वयपरमुखभागः । चोयालि इति भाषा । इत्यमरः ॥ ताभ्यां कपोलाभ्यां परो मुखभागो हनुरुच्यते । यत्र जम्भाभ्या दन्ता जायन्ते इति सुभूतिः । हन्ति कठोरमपि द्रव्यं हनुः नाम्नोति उः । तत्पर्य्यायेति पाठ हनोः स्वामिनम् । हनुः कपोलावयवे इत्यारिति कश्चित् । तन्वादिर्व्वा इत्यपि हनुश्च ॥ पुम्यत्रोति स्वामी । पर्य्यायेण कर्णहनू नपुंसके स्मश्रु जानु च गुदञ्चेति वररुचिः । इति भरतः ॥

**हनुः, स्त्री,** (हन्ति प्रकृपमिति । हन + उः । पटविलासिनी । इत्यमरः ।) रोगः । अस्त्रम् । मृत्युः । इति जटाधरः ॥

**हनुमत्, [त्] पुं,** (हनुरस्त्यस्येति । हनु + मतुप् ।) वानरविशेषः । स तु अञ्जनागर्भे पवनौरसजातः । रावणवधार्थे श्रीरामदूतश्च । तत्पर्य्यायः । मरुत्वान् २ आञ्जनेयः ३ योगचरः ४ अनिलः ५ हिडिम्बारिसखः ६ रामदूतः ७ [illegible] ८ । इति त्रिकाण्डशेषः ॥ [illegible] ९ । इति जटाधरः ॥ * ॥ अथ हनुमत्कल्पः ।

देव्युवाच ।
"शैवानि गाणपत्यानि शाक्तानि वैष्णवानि च ।
साधनानि च सौराणि चान्यानि यानि कानि च ।
श्रुतानि तानि देवेश ! त्वद्वक्त्रान्निःसृतानि च ॥
किञ्चिदन्यत्तु देवानां साधनं यदि कथ्यताम् ।
शङ्कर उवाच ।
शृणु देवि ! प्रवक्ष्यामि सावधानावधारय ॥
हनुमत्साधनं पुण्यं महापातकनाशनम् ॥
एतद्गुह्यतमं लोके शीघ्रसिद्धिकरं परम् ।
जयो यस्य प्रसादेन लोकत्रयजितो भवेत् ॥ * ॥
तत्प्रसादनविधिं वक्ष्ये नृणां सिद्धिकरं द्रुतम् ॥
वियत् मनवकं हनुमते च तदनन्तरम् ।
रुद्रात्मकाय कवचं फडिति द्वादशाक्षरः ॥
एतन्मन्त्रं समाख्यातं गोपनीयं प्रयत्नतः ।
तव स्नेहेन भक्त्या च दासोऽस्मि तव सुन्दरि ! ॥
एतन्मन्त्रं अर्ज्जुनाय प्रदत्तं हरिणा पुरा ।
जयेन साधनं कृत्वा जितं सर्व्वं चराचरम् ॥
नदीकूले विष्णुगेहे निर्ज्जने पर्व्वते वने ।
एकाग्रचित्तमाधाय साधयेत् साधनं महत् ॥"
ध्यानमाह ।
"महाशैलं समुत्पाट्य धावन्तं रावणं प्रति ।
तिष्ठ तिष्ठ रणे दुष्ट घोररावं समुत्सृजन् ॥
लाक्षारसारुणं रौद्रं कालान्तकयमोपमम् ।
ज्वलदग्निसमं नेत्रं सूर्य्यकोटिसमप्रभम् ॥
अङ्गदाद्यैर्महावीरैर्व्वेष्टितं रुद्ररूपिणम् ।
एवंरूपं हनुमन्तं ध्यात्वा यः प्रजपेन्मनुम् ॥
लक्षजपात् प्रसन्नः स्यात् सत्यं ते कथितं मया ।
ध्यानकमासक्तः पुंसां सिद्धिरेव न संशयः ॥
प्रातः स्नात्वा नदीतीरे उपविश्य कुशासने ।
प्राणायामं षडङ्गञ्च मूलेन सकलं चरेत् ॥
पुष्पाञ्जल्यष्टकं दत्त्वा ध्यात्वा रामं ससीतकम् ।
ताम्रपात्रे ततः पद्ममष्टपत्रं सकेशरम् ॥
रक्तचन्दनघृष्टेन लिखेत्तस्य शलाकया ।
कर्णिकायां लिखेन्मन्त्रं तत्रावाह्य कपिं प्रभुम् ॥
कर्णिकायां हनूमन्तं ध्यात्वा पाद्यादिकं ततः ।
सुग्रीवं लक्ष्मणं चैव अङ्गदं नलनीलकम् ॥
जाम्बवन्तञ्च कुमुदं केशरिणं दले दले ।
पूर्व्वादिक्रमतो देवि ! पूजयेद्गन्धचन्दनैः ॥
पवनञ्चाञ्जनाञ्चैव पूजयेद्दक्षवामतः ।
दलाग्रेषु कपिभ्योऽपि पुष्पाञ्जल्यष्टकं ततः ॥
ध्यात्वा तु मन्त्रराजं व लक्षं यावत्तु साधकः ।
लक्षान्तदिवसं प्राप्य कुर्य्याच्च पूजनं महत् ॥
एकाग्रचित्तमनसा तस्मिन् पवननन्दने ।
दिवारात्रौ जपं कुर्य्यात् यावत् सन्दर्शनं भवेत् ॥
सुदृढं साधकं मत्वा निशीथे पवनात्मजः ।
सुप्रसन्नस्ततो भूत्वा प्रयाति साधकाग्रतः ॥
यथेप्सितं वरं दत्त्वा साधकाय कपिप्रभुः ।
वरं लब्ध्वा साधकेन्द्रो विहरेदात्मनः सुखैः ॥
एतद्धि साधनं पुण्यं देवानामपि दुर्लभम् ।
तव स्नेहात् समाख्यातं भक्तासि मयि पार्व्वति ॥"
इति गारुडे हनुमत्साधनमिति तन्त्रसारः ॥ * ॥
"हनुमतोऽतिगुह्यान्तु लिख्यते वीरसाधनम् ।
ब्राह्मे मुहूर्त्ते उत्थाय कृतनित्यक्रियो द्विजः ॥
गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाष्टधा ।
मूलमन्त्रं ततो जप्त्वा सिञ्चेदादित्यसंख्यया ॥"
ततो वाससी परिधाय गङ्गातीरे पर्व्वते वा उपविश्य हां अङ्गुष्ठाभ्यां नमः इत्यादिना करान्न्यासौ कुर्य्यात् । ततः प्राणायामः । अकारादिवर्णानुच्चार्य्य वामनासापुटेन वायुं पूरयेत् पञ्चवर्गानुच्चार्य्य वायुं स्तम्भयेत् । यकारादिवर्णानुच्चार्य्य दक्षिणनासापुटेन रेचयेत् । एवं वारत्रयं कृत्वा मन्त्रवर्णैरङ्गन्यासं कृत्वा ध्यायेत् ॥ * ॥
"ध्यायेद्रणे हनूमन्तं कपिकोटिसमन्वितम् ।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ॥
लक्ष्मणञ्च महावीरं पतितं रणभूतले ।
गुरुञ्च क्रोधमुत्पाद्य गृहीत्वा गुरुपर्व्वतम् ॥
हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम् ।
आब्रह्माण्डं समाव्याप्य कृत्वा भीमं कलेवरम् ॥"
इति ध्यात्वा षट्सहस्रं जपेत् ॥
अथ मन्त्रः ।
"स्ववीजं पूर्व्वमुच्चार्य्य पवनञ्च ततो वदेत् ।
नन्दनञ्च ततो देयं ङेऽन्तमानेऽनलप्रिया ॥
दशार्णोऽयं मनुः प्रोक्तो नराणां सुरपादपः ॥"
हौं पवननन्दनाय स्वाहा । इतिमन्त्रः । सप्तमदिवसं दिवारात्रं व्याप्य जपेत् । ततो महाभयं दत्त्वा त्रिभागशेषासु निशासु नियतमागच्छति । साधको यदि साध्यं तरति तदेप्सितं वरं प्राप्नोति ।
"विद्यां वापि धनं वापि राज्यं वा शत्रुनिग्रहम् ।

तत्क्षणादेव चाप्नोति सत्यं सत्यं सुनिश्चितम् ॥"
इति च तन्त्रसारः ॥

हनुः, स्त्री, ( हनु+पचे ऊङ् । ) हनुः । इत्यमरटीकायां भरतः ॥ ( यथा,—
"शाखासु हन्वोः कण्ठाच्च चेद्दावन्तस्तु सञ्चयः ।"
इति सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ॥ )

हनुमान्, [ त् ] पु, ( हनुरस्त्यस्येति । हनु+मतुप् । ) हनुमान् । इति त्रिकाण्डशेषः ॥
( यथा, महाभारते । ३ । १४७ । २१ ।
"अहं केशरिणः क्षेत्रे वायुना जगदायुना ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥" )

हनूष, पुं, ( हन्ति मानुषानिति । हन+"क्रहनिभ्यामूषन् ।" उणा० ४।७३। इति ऊषन् । )
राक्षसः । इति त्रिकाण्डशेषः ॥

हन्त, व्य, हर्षः । अनुकम्पा । ( यथा, गीतायाम् । १० । १९ ।
"हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥" )
वाक्यारम्भः । विषादः । इत्यमरः । ३ । ३ । २४३ ॥
( यथा, भ्रमराष्टके । ८ ।
"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालम् ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥" )
अतिः । वादः । सम्भ्रमः । इति शब्दरत्नावली ॥ खेदः इति मेदिनी ॥ ( यथा, रामायणे ।
"काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥"
अन्तकल्पनम् । इत्यजयपालः ॥

हन्तकारः, पुं, ( हन्त इत्यस्य कारः करणम् । )
अतिथिदेयतण्डुलम् । इति केचित् ॥ हन्तशब्दः । यथा । यत्तु ।
"निवातो हन्तकारेण मनुष्यांस्तर्पयेदथ ।
कुशस्य मध्यदेशेन तृतीयेन उदङ्मुखः ॥"
इति लघुहारीतकम् ॥
हन्तप्रयोगेण जलदानमुक्तं तत् सनकादिप्रत्येकतर्पणे । यथा । सनकस्तृप्यतां तस्मैतदुदकं हन्त इत्यादौ । न तु पद्मपुराणीयमिलिततर्पणे । इत्याह्निकाचारतत्त्वम् ॥ * ॥ अतिथये दानार्थे षोडशग्रासाः । यथा,—
"पूजयेदतिथिं नित्यं नमस्येदर्च्चयेद्द्विजम् ।
मनोवाक्कर्म्मभिः शान्तमागतं स्वगृहं ततः ॥
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुद्ध्या तं परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्रन्तु स्याच्चतुर्गुणम् ।
पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते ॥"
इति कूर्म्मपुराणे उपविभागे । १९।११३-११५ ॥
अपि च ।
"भिक्षाञ्च यावतीं दद्यात् परिव्राड्ब्रह्मचारिणाम् ।
ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् ॥
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ।
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ।
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः ॥"
इति मार्कण्डेयपुराणे मदालसोपाख्याने । २९ । ३४ – ३६ ॥

हन्ता, [ ऋ ] त्रि, ( हन्तीति । हन+तृच् । )
हननकर्त्ता । यथा, भट्टौ ५ सर्गे ।
"भवन्तं कार्त्तवीर्य्यो यो हीनमस्त्रिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्व्वलौकिकः ॥"

हन्तुः, पुं, मृत्युः । वृषः । हनधातोः तुप्रत्ययेन निष्पन्नः । इति केचित् ॥ ( विनाशः । यथा, भागवते । ११ । ५ । ५० ।
"भूभारासुरराजन्यहन्तवे गुप्तये सताम् ।
अवतीर्णस्य निर्वृत्यै यशो लोके वितन्वतः ॥" )

हन्तोक्तिः, स्त्री, ( हन्त इत्यस्य उक्तिः । ) अनुकम्पोक्तिः । इति केचित् ॥

हन्नः, त्रि, ( हद् + क्तः । ) कृतपुरीषोत्सर्गः । इत्यमरः । ३ । १ । ९६ ॥

हन्यमानः, त्रि, ( हन + कर्म्मणि शानच् । ) वर्त्तमानहननविषयः । हनधातोः कर्म्मणि शानप्रत्ययेन निष्पन्नः । यथा,—
"हन्यमानं महासैन्यं विलोक्यासुरमर्द्दनम् ।
अभ्यधावन्निशुम्भोऽथ मुख्ययासुरसेनया ॥"
इति मार्कण्डेये देवीमाहात्म्यम् ॥

हपुषा, स्त्री, वनितद्रव्यविशेषः । तत् मरीचतुल्यवर्त्तुलफलम् । हबुष इति ख्यातम् । इति वैद्याः ॥ हाउवेर इति हिन्दीभाषा । तत् द्विविधम् । तन्मध्ये प्रथमं फलं मत्स्यगन्धम् । द्वितीयमश्वत्थफलसदृशं मत्स्यगन्धम् । तयोर्नामानि गुणाश्च ।
"हपुषा वपुषा विस्रा प्लीहघ्न्यल्पफला स्मृता ।
मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी ॥
हपुषा दीपनी तिक्ता सदुष्णा तुवरा गुरुः ।
पित्तोदरप्रमेहार्शोग्रहणीगुल्मशूलहृत् ॥
तथाप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि ॥"
इति भावमिश्रकृतभावप्रकाशः ॥ * ॥
अपि च ।
"हपुषा हवुषा विस्रा विस्रगन्धा विगन्धिका ।
अन्या चाश्वी स्वल्पफला कच्छुघ्नी ध्वाङ्क्षनाशिनी ॥
प्लीहशत्रुर्विषघ्नी च कफघ्नी चापराजिता ।
पूर्व्वा तु पञ्चनाम्नी स्यादपरा सप्तधाभिधा ॥
हपुषा कटुतिक्तोष्णा गुरुश्लेष्मबलामजित् ।
प्रदरोदरविट्शूलगुल्मार्शांसि हरा ॥"
इति श्रीनरहरिपण्डितविरचितराजनिर्घण्टे शताह्वादिवर्गस्तृतीयः ॥

हवुषा, स्त्री, हपुषा । इति राजनिर्घण्टः ॥

हम्बा, स्त्री, गोध्वनिः । तत्पर्य्यायः । हम्भा २ रम्भणम् ३ । इति जटाधरः ॥ हम्भा ४ रम्भा ५ । इति हेमचन्द्रः ॥ ( यथा, महाभारते । १ । १६६ । ३१ ।
"क्रोधरक्तेक्षणा सा गौर्हम्बारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्व्वशः ॥" )

हम्भा, स्त्री, गोध्वनिः । इति हेमचन्द्रः । त्रिकाण्डशेषश्च ॥

हम्म, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) महयान्तः । हम्मति । इति दुर्गादासः ॥

हय, क्लमे । गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-क्लमे अक०-गतौ सक०-सेट् । ) हयति । क्लमो ग्लानिः । इति दुर्गादासः ॥

हयः, पुं, ( हयति गच्छतीति । हय+अच् । हिनोतीति । हि+अच् वा । ) घोटकः । इत्यमरः । २ । ८ । ४४ ॥ अथ हयायुर्व्वेदः ।
धन्वन्तरिरुवाच ।
"हयायुर्व्वेदमाख्यास्ये हयैः सर्व्वैः [illegible] ।
काकुदी कर्णजिह्वश्च [illegible] ॥
कराली [illegible] ।
एकाण्डश्च [illegible] कञ्चुकी [illegible] स्तनी ॥
मार्ज्जारपादो [illegible] ।
यमजो वामनश्चैव मार्ज्जार[illegible] ॥
[illegible] ।
एते [illegible] ॥
[illegible] ।
[illegible] दोषिणः ॥
[illegible] दोषिणः ।
असंहता ये च वाजा [illegible] च ॥
[illegible] न दानीयाश्च जीविनः ।
[illegible] स्यात् द्विजभोजनात् ॥
लोहकं निम्बपत्राणि गुग्गुलुः [illegible] घृतम् ।
तिलश्चैव वचा हिङ्गु बध्नीयाद्वाजिनां गले ॥
आगन्तुकं दोषजन्तु व्रणं द्विविधमीरितम् ।
त्रिरात्रं खरं व तात् पित्तजं त्रिरात्रिकम् ॥
कण्डूदाहात्मकं पित्तात् श्लेष्मादं मन्दवेदनम् ।
घनं कफात् सन्निपातात् सर्व्वरूपं त्रिदोषजम् ॥
आगन्तुकन्तु शस्त्राद्यं दुष्टव्रणविशोधनम् ।
दन्तीमूलं हरिद्रे द्वे चित्रकं विश्वभेषजम् ॥
बर्हीनं सैन्धवं वापि तक्रकाञ्जिकपेषितम् ।
तिलकल्कं पिण्डोक्ता दधियुक्तं समन्ततः ॥
निम्बपत्रयुतं पिण्डं तिलैः शोधनरोपणम् ।
करवीरकदल्यर्कसर्ज्जकुटजचित्रकैः ॥
भल्लातस्य पचेत्तैलं नाडीव्रणहरं परम् ।
पञ्चवल्कलकल्कन घृतेन च प्रलेपयेत् ॥
द्वे हरिद्रे विडङ्गानि तथा लवणपञ्चकम् ।
पटोलं निम्बपत्रञ्च वचा चित्रकमेव च ॥
पिप्पली शृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ।
एतत्पानं कृमिश्लेष्ममदानिलविनाशनम् ॥
निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा ।
क्वाथयित्वा ततो वाहं स्नातरक्तं विचक्षणः ।
वाहमेव प्रदातव्यं पानं कुष्ठापशान्तये ॥
व्रणेषु च कुष्ठेषु तैलं सर्षपजं हितम् ।
पञ्चवल्कलतैलं वा दशमूलञ्च शोधनम् ॥
लग्नादीन् वदे कल्पान् शुक्तिपानाल्लेपतः ।
मातुलुङ्गरसोपेतं मांसलारसकेन वा ॥"
मांसलाख्याने मांसानामिति च पाठः ।

'स्नं दद्यादसोमस्य अन्यैर्व्वा तैलसंयुतैः ।
पलद्वयं प्रथमेऽह्नि एकैकपलवृद्धितः ॥
यावद्धि शान्तिपूर्णा स्यात्तत्तावत्युत्तमात्मके ।
मध्यमे चतुर्हंश स्युरधमेऽष्टपलानि च ॥
शरन्निदाघयोर्नैव देयो नैव तु दापयेत् ।
तैलेन वातिके पित्ते शर्कराज्यपयोऽन्वितैः ॥
कटुतैलैः कफे व्याधैः कफे मुद्गान् कुलत्थकान् ।
शालिषष्टिकदुग्धाशी हयोऽखिलजुगुप्सितः ॥
पक्वजम्बूनिभो हेमवर्णः श्रेष्ठश्च गुग्गुलुः ।
षडप्रहरणे सूर्य्ये गुग्गुलुं पाययेद्धयम् ॥
भोजने पायसं दुग्धं नाडीस्तिस्रस्तनोति सः ।
विकाले भोजयेदश्वं शाल्यन्नं वातुले ददेत् ॥
मासानाञ्च रसैः पित्ते मधुमुद्गरसाज्यकैः ।
कफे मुद्गान् कुलत्थान् वा कटुतिक्तान् स्मृतान् हये ॥
व्याधिते व्याधिते श्वासे त्रिदोषादौ तु गुग गुल्म् ।
शमैर्द्दूर्व्वा सर्व्वरोगे प्रथमेऽह्नि पलं ददेत् ॥
विवर्द्धयेत् ततो वर्षमेकादिपलपञ्चकम् ।
उत्तमे स्याच्च चत्वारि त्रीणि मध्यजघन्ययोः ॥
पानेन भोजनेनात्र अशीतिपलकं वरं ।
मध्ये षष्ट्याधमेऽथ चत्वारिंशच्च भागिषु ॥
व्रणे कुष्ठेषु खञ्जेषु त्रिफलाक्वाथसंयुतम् ।
मन्दाग्नौ शोथरोगे च गवा मूत्रेण योजयेत् ॥
वातपित्तात्मके व्याधौ गोक्षीरघृतसंयुतम् ।
देयं कृपाणां पुष्ट्यर्थं मापयेत्काश्च भोजनम् ॥
सुपिष्टायाः प्रदातव्यं गुडूच्याः पलपञ्चकम् ।
प्रभाते घृतसंयुक्तं शरद्ग्रीष्मे पु वाजिनाम् ॥
रोगघ्नं पुष्टिदञ्चापि बलतेजोविवर्द्धनम् ।
तद्देवाश्वाय दद्याद्वै क्षीरयुक्तमथापि वा ॥
गुडूचीकल्कयोगेन शतावर्य्यश्वगन्धयोः ।
चत्वारि त्रीणि मध्यस्य जघनस्य पलानि हि ॥
अकस्मादयवं वाहानामेकरूपं यदा भवेत् ।
म्रियते च तदा क्षिप्रं उपसर्गं तमादिशेत् ॥
होमाद्यैरस्तया विप्रभोजनैर्बलिकर्म्मणा ।
शान्त्यापसर्गशान्तिः स्याद्धरीतकादिकल्पतः ॥
हरीतकी सगोमूत्रा तैलेन लवणान्विता ।
आदौ पञ्च ततः पञ्चवृद्ध्या पूर्णा शतावधि ।
उत्तमाश्वे शतं प्रोक्तमशीतिः षष्टिरुत्तरे ॥*॥
गजायुर्व्वेदमाख्यास्ये उक्ताः कल्पा गजे हिताः ।
गजे चतुर्गुणा मात्रा ताभिर्गजरुगर्द्दनम् ॥
गजोपसर्गव्याधीनां शमनं शान्तिकर्म्म च ।
पूजयित्वा सुरान् विप्रान् ब्राह्मणे कपिलां ददेत् ॥
दन्तिदन्तद्वये मालां विबध्नीयादुपोषितः ।
मन्त्रेणं मन्त्रिता वद्धो ववामिद्धार्थकामले ॥
सूर्य्याद्याः शिवदुर्गाश्रीविष्णुता रक्षसां गणः ।
बलिं दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥
भोजनं मन्त्रितं दद्यात् भस्मनोन्मूनयेद्गजम् ।
भूतो रक्षा शुभा सेव्या वारुणी रक्षसां सदा ॥
त्रिफला पञ्चकोले च दशमूलं विडङ्गकम् ।
शतावरी गुडूची च निम्बवासककिंशुकाः ॥
गजरोगविनाशाय प्रोक्तः कल्कः कषायकः ।
आयुर्व्वेदो गजाश्वानामुक्तः संक्षेपसारतः ॥"

इति गारुडे हयायुर्व्वेदः २०७ अध्यायः ॥ युक्तिकल्पतरुक्तहयपरीक्षा घोटकशब्दे द्रष्टव्या ॥ * ॥ हये वर्णनीयानि यथा । वेगः १ शौर्यम् २ तेजः ३ सल्लक्षणस्थितिः ४ खुरोत्खातरजः ५ रूपम् ६ जातिः ७ गतिविचित्रता ८ । इति कविकल्पलता ॥ * ॥ अथ हयशकुनः ।

"हेषारवं मुञ्चति वामतो यः
क्षुण्णक्षितिर्दक्षिणपादघातः ।
कण्डूयते दक्षिणमङ्गभागं
तुरं तुरङ्गः स पदं ददाति ॥"

इति वसन्तराजे हयशकुनः १३ वर्गः ॥

हयकातरा, स्त्री, ( हयः कातरो यस्याः । ) अश्वकातराहृक्षः । घोडकाथरा इति हिन्दी भाषा ॥

हयकातरिका, स्त्री, ( हयकातरा एव । स्वार्थे कन् । टाप् अत इत्वम् । ) अश्वकातराहृक्षः । घोडकाथरा इति हिन्दी भाषा । यथा,—
"कातरा हयपर्य्यायः कातरान्ते प्रकीर्त्तिताः ।
अश्वकातरिका तिक्ता वातघ्नी दीपनी परा ॥"

इति राजनिर्घण्टः ॥

हयगन्धं, क्ली, ( हयस्येव गन्धो यस्य । ) काचलवणम् । इति राजनिर्घण्टः । ( विवरणमस्य काचलवणशब्दे ज्ञातव्यम ॥ )

हयगन्धा, स्त्री, ( हयस्येव गन्धो यस्याः । ) अश्वगन्धा । इति रत्नमाला । ( अस्याः पर्य्यायो यथा,—
"गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया ।
वराहकर्णी वरदा बलदा कुष्ठगन्धिनी ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ अजमोदा । इति राजनिर्घण्टः ॥

हयग्रीवः, पुं, ( हयस्य ग्रीवा इव ग्रीवा यस्य । ) मधुकैटभहृतवेदोद्धारार्थं विष्णोरवतारविशेषः । तस्य रूपं यथा,—
"सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ॥
तस्य मूर्द्धा समभवत् द्यौः सनक्षत्रतारका ।
केशाश्चास्याभवन् दीर्घा रवेरंशुसमप्रभाः ॥
कर्णावाकाशपाताले ललाटं भूतधारिणी ।
गङ्गा सरस्वती श्रोण्यौ भ्रुवावास्तां महोदधी ॥
चक्षुषी सोमसूर्य्यौ ते नासा सन्ध्या पुनः स्मृता ।
प्रणवस्त्वथ संस्कारो विद्युज्जिह्वा च निर्म्मिता ॥
दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥
ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा ।
एतद्धयशिरः कृत्वा नानामूर्त्तिभिरावृतम् ॥"

इति महाभारतम् ॥*॥ ( हयग्रीवदैत्यवधार्थमेव भगवान् हयग्रीवमूर्त्तिरभवत् । इति देवीभागवतमतम् ॥ अस्य विवरणन्तु तत्रैव १ स्कन्धे ५ अध्याये द्रष्टव्यम् ।) विष्णुवध्यदैत्यविशेषः । इति हेमचन्द्रः ॥ स च कल्पान्ते ब्रह्मणि प्रसुप्ते वेदं हृतवान् । तद्वेदोद्धारणार्थं विष्णुना मत्स्यावतारेण स हतः । इति केचित् ॥ * ॥ अपि च ।
"हयगङ्गाजलस्यान्तस्तीरे ब्रह्मसुतस्य च ।
विश्वनाथाह्वयो देवः शिवलिङ्गसमन्वितः ।
विश्वदेवो महादेवो योनिमण्डलरूपिणा ॥
हयग्रीवेण युयुधे तत्र देवो जगत्पतिः ।
हयग्रीवं यत्र हत्वा मणिकूटं तथागमत् ॥"

इति कालिकापुराणे ८२ अध्यायः ॥

हयग्रीवहा, [न्] पुं, (हयग्रीवं हन्तीति । हन् + क्विप् । ) विष्णुः । इति हेमचन्द्रः ॥

हयग्रीवा, स्त्री, दुर्गा । यथा,—
"नारसिंही हयग्रीवा हिरण्याक्षविनाशिनी ।"

इति तस्याः सहस्रनामस्तोत्रम ॥

हयङ्कषः, पुं, (हयं उच्चैःश्रवसं कषतीति । कष + खच् । ) मातलिः । स तु इन्द्रसारथिः । इति त्रिकाण्डशेषः ॥

हयनं, क्ली, (हयति गच्छत्यनेनेति । हय + ल्युट् ।) कर्णीरथः । इत्यमरः ॥ तस्य रूपान्तरं हृदनम् । इति तट्टीकायां भरतः ॥

हयपुच्छी, स्त्री, (हयस्य पुच्छमिव आकृतिरस्याः । ङीष् । ) माषपर्णी । इत्यमरः । २ । ४ । १३८ ॥

हयप्रियः, पुं, (हयस्य प्रियः । ) यवः । इति हेमचन्द्रः ॥ ( यवशब्देऽस्य गुणादयो ज्ञेयाः ॥ )

हयप्रिया, स्त्री, ( हयस्य प्रिया । ) अश्वगन्धा । खर्ज्जूरी । इति राजनिर्घण्टः ॥

हयमारः, पुं, ( हयं मारयतीति । मृ + णिच् + अण् । ) करवीरः । इति राजनिर्घण्टः ॥

हयमारकः, पुं, ( हयं मारयतीति । मृ + णिच् । ण्वुल् । ) करवीरवृक्षः । इत्यमरः । २।४।७६ ॥

हयमारणः, पुं, (हयं मारयतीति । मृ + णिच् + ल्युः । ) अश्वत्थवृक्षः । इति शब्दचन्द्रिका ॥

हयवाहनः, पुं, ( हयो वाहनमस्य । ) रेवन्तः । स तु सूर्य्यपुत्रः । इति हेमचन्द्रः ॥ कुवेरः । इति केचित् ॥

हयवाहनशङ्करः, पुं, रत्नकाञ्चनः । इति शब्दचन्द्रिका ॥

हयशाला, स्त्री, ( हयस्य शाला । ) अश्वालयः । यथा, मात्स्ये । २१७ । १८—२१ ।
"गवां स्थानं तथैवाश्च तुरगाणान्तथैव च ।
उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ॥
दक्षिणाभिमुखा वाथ परिशिष्टास्तु गर्हिताः ।
तुरगास्तु तथा धार्य्याः प्रदीपैः सर्व्वरात्रिकैः ॥
कुक्कुटा वानराश्चैव मर्कटाश्च नराधिप ! ।
धारयेदश्वशालायां सवत्सां धेनुमेव च ।
अजाश्च धार्य्या यत्नेन तुरगाणां हितैषिणा ॥
गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमम् ।
अस्तं गते न कुर्व्वीत देवदेवे दिवाकरे ॥"

हयशीर्षः, पुं, ( हयस्य शीर्षं शीर्षं यस्य । ) विष्णुः । यथा,—
"ततो जगाम ब्रह्मोऽसौ द्रष्टुं वाजिमुखं प्रभुम् ।

हरिः

गोष्पदं त्रिपुरं ज्ञेयं सदा चाङ्कुशमानतः ।
त्रिकोणाधस्तु निर्द्दिष्टमथवा कलसो यथा ॥
श्रीनारद उवाच ।
न श्रुतं न च दृष्टञ्च चिह्नमेतत्समोदितम् ।
रूपं वै सदृशं ब्रह्मन् वद त्वं साम्प्रतं मम ॥
श्रीब्रह्मोवाच ।
पताका च ध्वजा प्रोक्ता प्रान्ते त्रैलोक्यकारकः ।
पद्मं वै बाह्यपत्रञ्च सातयं स्तुतिनोदितम् ॥
वज्र खण्ड इति प्रोक्तं दृष्टं वै गोत्रभित्करे ।
सहस्रारं समाख्यातं क्वचिद्वेदविदो विदुः ॥
अङ्कुशो नागशिक्षार्थं निर्म्मितं यच्च पुत्रक ।
तादृशं तद्भवेच्चिह्नं विज्ञेयं वैष्णवैर्नरैः ॥
यवोऽप्यङ्गुष्ठमूलेषु कथितो मुनिभिर्ध्रुवम् ।
आतपत्रं नृपच्छत्राकारं वत्स सुशोभनम् ॥
चक्रं सुदर्शनाकारं यच्चिह्नं तन्मनोहरम् ।
वासुदेवकरे यद्वत् मुनिभिः परिकीर्त्तितम् ॥
विवाहादौ च माङ्गल्ये पुत्र जाते तथैव च ।
स्त्रीभिश्चैव सदा कार्य्यं स्वस्तिकञ्च तदुच्यते ॥
रेखाश्चतस्रः संख्याताः स्तिर्य्यगूर्द्ध्वा यदोचिताः ।
पल्लवेन च संयुक्तमष्टकोणं तदुच्यते ॥
दण्डाकारोर्द्ध्वरेखा स्यात् न वक्रा दृश्यते यदा ।
मध्यमाङ्गुष्ठमानेन कथिता मुनिभिः किल ॥
दशभिश्चिह्नितैः पादं वन्द्यं पूज्यञ्च सर्व्वदा ।
चिह्नान्येतानि भो विप्र दक्षिणे चरणे विभोः ।
स श्रीकृष्ण इति ज्ञेया बुद्धिमद्भिर्नरोत्तमैः ॥*॥
यद्रूपाणि च चिह्नानि वामपादे च तत् शृणु ॥
इन्द्रचापं धनुर्व्विद्यात् ह्यङ्गुलञ्च चतुर्गुणम् ।
मौर्व्वीसंयुक्तवक्रं चन्तदाहुर्मुनयो ध्रुवम् ॥
त्रिकोणन्तु त्रिरेखाख्यं शकटाकारकं यदा ।
तदा वै तत्त्रिकोणाख्यं चिह्नन्तु मुनिनोदितम् ॥
कलसो वर्त्तुलाकारो ग्रीवया सहितो यदा ।
दृश्यते तादृशं पुत्र चिह्नितं सकलाधिकम् ॥
द्वितीयायां यथा चन्द्रो दृश्यते चाम्बरे क्वचित् ।
तदर्द्धं चन्द्रं विज्ञेयं श्रुतौ च प्रतिपादितम् ॥
अम्बरं बिन्दुरित्येवं द्विरेखासुसमन्वितम् ।
वर्त्तुलञ्च सदा दृष्टं श्रीकृष्णे परमात्मनि ।
मत्स्याकारो भवेद्यत्र तच्चिह्नं मत्स्यसञ्ज्ञकम् ।
जम्बूफलसमाकारं जम्बूचिह्नं विदुर्बुधाः ॥
एतच्चिह्नं समाख्यातमूनविंशतिसंख्यकम् ।
पादयोरुभयोराद्यः कृष्णस्य मुनयोऽनघाः ॥६॥
एवं वृन्दावनेश्वर्य्याः पादयोस्तापसत्तम ।
ऊनविंशतिचिह्नानि कथयामीह तत् शृणु ॥
दक्षिणे नव चिह्नानि राधाया दश वामतः ।
भेदोऽयं कथिता विप्र कृष्णस्याह्लादरूपिणी ॥
एतानि पदचिह्नानि दृष्टानि च श्रुतानि च ।
त्वदग्रे कथितान्येव पुनः किं कथयाम्यहम् ॥
नारद उवाच ।
चिह्नान्येतानि भो ब्रह्मन् किं कर्त्तव्यानि वैष्णवैः ।
कथयस्व हि सर्व्वज्ञ युगयोः पादयोर्म्मम ॥
ब्रह्मोवाच ।
सौवर्णं राजतं वापि पाषाणं काष्ठजादिकम् ।
युगलं युगलं पादं कृत्वा चिह्नैश्च चिह्नितम् ॥

हरिः

स्वनामाङ्के विधत्यान्तानि पदचिह्नानि वैष्णवः ।
नाभिकर्द्धं मुनिः स्नात्वा वत्स वृन्दावनेशयोः ॥
अथवा चिह्नितं पादं कृत्वा भागवतोत्तम ! ।
पूजामारभते तावत् यावज्जीवति नारद ! ॥
पूजितो देवदेवेशः फलं भवति देहिनाम् ।
तथा तच्चिह्नितं पादं अर्च्चनं कुरुते यदि ॥
राजसूयाश्वमेधादिफलं भवति सर्व्वथा ।
तदनन्तगुणं प्रोक्तं प्रत्येकं पूजयेत् सुधीः ॥”
इति पाद्मोत्तरखण्डे श्रीकृष्णपदचिह्नमाहात्म्यं नाम ११२ अध्यायः ॥*॥ तन्नाममाहात्म्यं यथा,
श्रीसदाशिव उवाच
“शृणु नारद ! भद्रं ते कथयिष्यामि चानघ ।
पार्व्वत्यै यदहं पृष्टः प्रावोचन्तु यथातथम् ॥
वेदस्याध्ययनं यज्ञं तपो योगः शमो दमः ।
कृष्णनामसहस्रांशैर्देवर्षे ! नहि तुल्यकम् ॥
स्नानं देवार्च्चनं ध्यानं धारणा नियमो यमः ।
प्रत्याहारः समाधिश्च हरिनामसमं न च ॥
गोविन्दनामसदृशं न त्यागो न व्रतं मुने ! ।
न सङ्कल्पो नापि शौचं न पुण्यं न फलं तथा ॥
वानप्रस्थं ब्रह्मचर्य्यं गार्हस्थ्यं कर्म्मन्यासकम् ।
धर्म्म एव सदाचारो न हरेर्नामतुल्यकः ॥
न हरेर्नामसदृशं कर्म्म किञ्चित् तपस्तथा ।
सर्व्वतीर्थाटनञ्चैव चतुर्द्धा मुक्तिरेव च ॥
कृष्णनाम परा मुक्तिः कृष्णनाम परा गतिः ।
कृष्णनाम परं पुण्यं कृष्णनाम परं फलम् ॥
कृष्णनाम परो धर्म्मः कृष्णनाम परं तपः ।
कृष्णनाम परा शान्तिः कृष्णनाम परा स्तुतिः ॥
कृष्णनाम परा भक्तिः कृष्णनाम परा स्मृतिः ।
कृष्णनाम परं यज्ञं कृष्णनाम परा मतिः ॥
कृष्णनाम परं ज्ञानं कृष्णनाम परा स्थितिः ।
कृष्णनाम परं दानं कृष्णनाम जगत्प्रियम् ॥
कृष्णनाम परं श्राद्धं पितॄणां तर्पणं सदा ।
कृष्णनाम परा प्रीतिः कृष्णनाम परः प्रभुः ॥
कृष्णनाम जगत् सत्यं जन्तूनां कारणं परम् ।
जीवनं शरणं कृष्णनामैव विपुलं धनम् ॥
कृष्णनाम जगद्वन्द्यं जगद्बीजं गुणः परः ।
विश्वधारं कृष्णनाम जगतां पावनं परम् ॥
कृष्णनाम जगज्जन्म यत् किञ्चित् सचराचरम् ।
धार्य्यते पाल्यते विश्वं कृष्णनाम्ना प्रलीयते ॥
यत् किञ्चित् क्रियते कर्म्म कृष्णनाम परायणः ।
तत् कर्म्म कर्म्म एव स्यात् साक्षादृष्टान्ति केशवः ॥
श्रीहरेर्नाम ग्रहणं प्रशस्तञ्च युगे युगे ।
कुत्रापि न भवेत् सिद्धिर्हित्वा तन्नाम कर्म्म च ॥
विशेषतः कलियुगे कृष्णनामैव केवलम् ।
त्यक्त्वा नास्त्येव देवर्षे ! लोकस्य गतिरन्यथा ॥
हरिनामपरः शान्तः क्षमाशीलो जितेन्द्रियः ।
नीत्वा कुलसहस्राणि कृष्णं प्राप्नोति स्वानि च ॥
श्रीकृष्णहरिगोविन्ददासनामादिको जनः ।
यः कश्चिद्याति कलुषं सर्व्वं तन्नामकीर्त्तनात् ॥
हत्यायुतं पानसहस्रमुग्रं
गुर्व्वङ्गनाकोटिनिषेवणञ्च ।

हरिः

स्तेयान्यनेकानि हरेः प्रियेण
गोविन्दनाम्ना निहतानि सद्यः ॥
अनृच्छयापि दहति स्पृष्टो हुतवहो यथा ।
हरिनाम दहेत् पापं तथाश्रमुखनिर्गतम् ॥
सकृदुच्चारितं येन हरे कृष्णेति निश्चयम् ।
यमाधिकारं नो याति कार्य्येण विना मुने ॥
अज्ञानादथवा ज्ञानादभ्यभावेन वा पुनः ।
कृष्णनामैव यश्चिन्ता स याति परमं पदम् ॥
ब्रह्महा मद्यपः स्तेयी अज्ञानाद्गुरुतल्पगः ।
भवार्णवं तरेदन्ते कृष्णनामपरायणः ॥
पितृहा नृपहा गोघ्नः स्त्रीहन्ता पापिनोऽपरे ।
गोविन्दनामोच्चारेण पश्चात् शुद्धिमाप्नुयुः ॥
यद्भूतं पापमज्ञानाद्वर्त्तमानञ्च नारद ।
यद्भविष्यति तत् सर्व्वं कृष्णनाम दहेद्ध्रुवम् ॥
जीवानान्तु सदा द्रोही चात्महा निन्द्यकर्म्मकृत् ।
स पूतो जायते धन्यो नामकीर्त्तनतो हरेः ॥
क्षेत्रतीर्थतपोदानव्रतार्च्चनं फलं तथा ।
शक्तिश्च सर्व्वयज्ञानां मुक्तिरध्यात्मवस्तुनः ॥
ज्ञानञ्च देवमहतां सर्व्वसिद्धिप्रदं फलम् ।
नैमित्तिकानां नित्यानां तथा च काम्यकर्म्मणाम् ॥
वर्णाश्रमानां योगानां स्थापितं येषु नामसु ।
प्राक्तञ्च सर्व्वाघहरं पुरा कृष्णेन नारद ॥
त्रैलोक्ये यानि पुण्यानि धर्म्मकर्म्मफलानि च ।
तुल्यतां तानि नो यान्ति हरिनामानुकीर्त्तने ॥
नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ।
तावत् कर्त्तुं न शक्नोति पातकं पातकी जनः ।
श्वपचो हि जिनं कर्त्तुं नहि शक्नोति यत्नतः ॥
तावदन्तं मुने यावत् कृष्णनामानुकीर्त्तनम् ।
मानसं कर्म्मजं वाग्जं लोके तत्रास्ति कल्मषम् ।
सर्व्वाशुभघ्नं शिवदं यद्धरेर्नामकीर्त्तनम् ।
चान्द्रायणादिभिः कृच्छ्रैः शुद्धिर्न स्यात्तथा नृणाम् ॥
कीर्त्तनेन हरेर्नाम्नः सकृदेव भवेद्यथा ।
सकृदाख्यातितं येन कृष्णनाम सुमङ्गलम् ।
तज्जिह्वा वैष्णवी सार्थं वचो वक्तव्यकारणम् ॥
ऋग्वेदो हि यजुर्व्वेदः सामवेदोऽप्यथर्व्वणम् ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥
पापिनोऽपि हरेर्नाम कीर्त्तयन्ति यथा यथा ।
सर्व्वाघं भस्मसात् कृत्वा कृष्णभक्तिस्तथा तथा ॥
सकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम् ।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति नारद ! ॥
पुराणशास्त्रागमवेदपाठ-
तीर्थावगाहादिफलं यथेष्टम् ।
गोविन्दनाम्नोऽपि कलाशतांशे-
स्तुल्यं भवेन्नैव मुने कदाचित् ॥ :
मा ऋचो मा यजुर्व्विप्र न साम पठ किञ्चन ।
कृष्णगोविन्दनामादि गेयं गायस्व नित्यशः ॥
गोकोटिदाने ग्रहणे खगस्य
प्रयागगङ्गाम्बुनि कल्पवासः ।
यज्ञायुतं मेरुसुवर्णदानं
गोविन्दनाम्नो न समं शतांशैः ॥

